उक्तविज्ञानस्यौत्प्रेक्षिकत्वशङ्कां व्युदस्यन्ननादिपारम्पर्यागतत्वं दर्शयति—**तद्धैतदिति** । सोपकरणमुपकरणैः शमादिभिः सहितमिति यावत् । तद्द्वारेण हिरण्यगर्भद्वारेणेत्यर्थः । विद्याप्रकरणं समाप्याविद्वदनुष्ठितस्य कर्मणः साफल्यमविद्वत्संतोषार्थं कथयति—**यथेत्यादिना** । इहेति प्रकृतोपनिषदुक्तिः । प्राङ्मुखत्वपवित्रपाणित्वादयो नियमाः । भिक्षाशनस्नानाचमनादिविधिः । किमित्येष नियमोऽध्ययने कथ्यते तत्राऽऽह—**एवं हीति** । तत्रापीति सप्तम्या यथोक्तोऽधिकारी गृहीतः । एतत्सर्वं स्वयं कुर्वन्ब्रह्मलोकमभिसंपद्यत इति संबन्धः । एवं वर्तयन्नित्यस्य व्याख्यानमेवं यथोक्तेन प्रकारेण कुर्वन्निति । अप्राप्तप्रतिषेधाशङ्कां वारयति—**पुनरावृत्तेरिति** । चन्द्रलोकादिवद्ब्रह्मलोकादपि प्राप्ता पुनरावृत्तिस्तस्या न चेत्यादिना प्रतिषेधान्नाप्राप्तप्रतिषेधप्रसक्तिरित्यर्थः । अपुनरावृत्तिवाक्यस्थान्यक्षराणि व्याकरोति—**अर्चिरादिनेति** । प्रागिति महाप्रलयात्पूर्वकालोक्तिः । ततो ब्रह्मलोकादित्यर्थः ॥ १ ॥

इत्यष्टमाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥

वियदादिजगज्जातं जातमज्ञानतो यतः ।
तदस्मि नामरूपादिविरहि ब्रह्म निर्भयम् ॥ १ ॥
नमस्त्रय्यन्तसंदोहसरसीरुहभानवे ।
गुरवे परपक्षौघध्वान्तध्वंसपटीयसे ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यश्रीभगवदानन्दज्ञानकृतायां छान्दोग्यभाष्यटीकायामष्टमोऽध्यायः ॥ ८ ॥

---

१ ग. ट. °भाष्य वि° । २ ग. ट. °र्वं कु° ।

समाप्तेयमानन्दगिरिकृतटीकासंवलितशांकरभाष्य-
समेता छान्दोग्योपनिषत् ।

## अथ च्छान्दोग्योपनिषद्विभागानां वर्णानुक्रमणिका प्रारभ्यते ।

—:+※+:—

**समाप्तेयं छान्दोग्योपनिषद्विभागानां वर्णानुक्रमणिका।**